**सहस्रं सहस्रं, पुण्यतरतीर्थपात्रकालविशेषप्राप्तौ पतदुत्तरसङ्ख्यम् ॥**

**एवञ्च मयि देदीयमाने द्विजकुले च तोतुष्यमाणे मदीयधने च पोपुष्यमाणे पुष्टिविसृष्टिमत्सरश्लाघनीयो द्राघीयानरंहीदनेहा ॥**

**क्रमेण च —**

**श्रीमत्तयेह सुकृतेषु च दिव्यलोक-**
**कामित्वतः समुपजातरजोविकारात् ।**

त्वात् अस्मीति वर्तमानाक्रियानिर्देशस्य सम्प्रत्यनौचित्यात् ॥

**एवञ्चेति** । किञ्च एवं इत्थं मयि देदीयमाने पुनः पुनः अतिशयेन ददाने । 'डुदाञ् दाने' इत्यस्मात् 'धातोरेकाचो–' इति यङि 'सन्यङोः' इति द्वित्वे अभ्यासकार्ये 'गुणो यङ्लुकोः' इत्यभ्यासगुणे सनाद्यन्ता' इति धातुत्वात् लटि ङिदन्तत्वादात्मनेपदे शानचि मुगागमः । द्विजकुले ब्राह्मणसमूहे च तोतुष्यमाणे अतिशयेन सन्तुष्यति । 'तुष तुष्टौ' इत्यस्मात् धातोः पूर्ववद्यङादि । णत्वन्तु विशेषः । मदीये मत्सम्बन्धिनि । वृद्धाच्छः । धने च पोपुष्यमाणे पुष्टिं प्राप्नुवति । 'पुष पुष्टौ' इत्यस्मात् पूर्ववद्यङादि । अत्र सर्वत्र 'यस्य च भावेन भावलक्षणम्' इति सप्तमी । पुष्टिविसृष्ट्योः समृद्धित्यागयोः मत्सरेण परस्परसङ्घर्षणेन श्लाघनीयः प्रशंसनीयः । 'श्लाघृ कत्थायाम्' इत्यस्मात् कर्मण्यनीयर् प्रत्ययः । द्राघयिानतिदीर्घः। दीर्घशब्दादीयसुनि 'प्रियस्थिर' इत्यादिना द्राघ्यादेशः । अनेहा कालः । 'ऋदुशनस्–' इत्यनङ् । 'कालो दिष्टोऽप्यनेहापि' इत्यमरः । अरंहीत् अगमत् । 'रहि गतौ' इत्यस्माल्लुङि च्लेः सिचि 'इट ईटि' इति सलोपः ॥

**क्रमेणेति** । किञ्च क्रमेण इह लोके श्रीमत्तया ऐश्वर्येण हेतुना सुकृतेषु क्रियमाणेषु पुण्येषु च विषये । दिव्यलोकान् स्वर्गादीन् कामयत इति दिव्यलोककामी । 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनिः । तेषां भावस्तत्त्वम् । ततः काम्यकर्मानुष्ठानादिति भावः । समुपजाताद् सम्भूताद् रजोविकारात् अहङ्कारा-

माद्दग्विधः क इव निर्मलकर्मकारी-
त्याविर्बभूव हृदि कोऽपि मदाङ्कुरो मे ॥ १२ ॥

तच्च मदेकगम्यं मदाङ्कुरं कष्टतरोऽयमनर्थावह इति बहुतर-विचारैर्निवारयन्नपि रजोतिभारादपारयन्नहमवास्थिषि ॥

तदनु कुहचिदहनि बहुतरसचिवनृपकुलास्तृतामास्थानीमास्थायुके मयि विलोकितचराविव कौचन बाडवानलतेजसौ बाडवप्रवरौ सवत्सक-

द्रेतोः । अहमिव दृश्यत इति मादृक् । 'त्यदादिषु-' इति दृशेः क्विन्, पूर्व-पदस्य 'त्वमावेकवचने' इति मपर्यन्तस्य मादेशे 'आ सर्वनाम्नः' इत्याकारोऽन्ता-देशः । मादृश इव विधा प्रकारो यस्य सः । निर्मलधर्मकारी निर्दोषपुण्यकर्ता । क इव न कोऽपीत्यर्थः । इत्येवं मे हृदि कोऽपि मदाङ्कुरः प्रमादनवावतारः आविर्बभूव प्रादुर्भूतः । भवतेर्लिट् ॥

मदेकगम्यं मयैकेन गम्यं ज्ञेयम् । परानवगाह्यमित्यर्थः । तत् मदाङ्-कुरञ्च अयमनर्थावहः आपन्मूलमिति बहुतरविचारैः भूयिष्ठतत्त्वपरामर्शैः निवा-रयन् निवर्तयन्नपि रजोतिभारादपारयन्नशक्नुवन् । 'पार तीर कर्मसमाप्तौ' इति चौरादिकेन शत्रन्तेन नञ्समासः । अहमवास्थिषि अवस्थितवान् । अवपूर्वात् तिष्ठतेः लुङि 'समवप्रविभ्यः स्थः' इत्यात्मनेपदे इटि सिचि 'स्थाघ्वोरिच्च' इतीदादेशः ॥

तदनु तदनन्तरं मयि कुहचित् क्वचित् अहनि दिवसे । हप्रत्ययस्य छान्दसत्वेऽपि निरङ्कुशाः कवयः प्रयुञ्जते । बहुतराः अपरिमिताः सचिवाश्च नृपाश्च तेषां कुलेन समूहेन आस्तृतां व्याप्ताम् । 'स्तृञ् छादने' इत्यस्मात् आङ्पूर्वात् कर्मणि क्तः । आस्थानीं सभाम् ।

'आस्थानी क्लीब आस्थानं स्त्रीनपुंसकयोस्सदा'

इत्यमरः । आस्थायुके सति आतिष्ठति सति । आङ्पूर्वात्तिष्ठतेः 'लुष-पत ' इत्यादिना उकञि युगागमः । विलोकितचराविव पूर्वं विलोकितौ किल । 'भूतपूर्वे चरट्' इति चरट् । बाडवानलतेजसौ बडवामुखाग्निप्रकाशौ । सवत्स-

**धेनुपुरस्सरौ दत्तापहारिन्नपहृतप्रदायिन् लुब्धतम स्तब्धतमेत्यादि बहुतरसमुद्घोषणपरौ बहिस्सभातलं विनिस्सरद्रोषसुदुर्दर्शावदर्शीषाताम् ॥**

**ततश्च किमेतदिति समाकुलेषु सकलेषु अहं पुनरनाकुल इव समुपगम्य नन्नम्यमानो दुस्सहतरभर्त्सनरवानुद्वमदेतद्द्विजवरद्वितयमतिरूषितदीप्राक्षं किमिदमिति समप्राक्षम् । तयोरन्यतरश्च संन्यगादीत्ः—**

कायाः सतर्णकायाः धेनोः गोः पुरस्सरौ अग्रेसरौ । 'पुरोऽग्रतोऽग्रेषु सर्तेः' इति टच् । दत्तापहारिन् दत्तापहरणशील । 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनिः । अपहृतप्रदायिन् परिमुषितदानशील । पूर्ववण्णिनिः, युगागमस्तु विशेषः । लुब्धतम अत्यन्ताभिलाषुक स्तब्धतम अत्यन्तमूढ इत्यादि एवमादि यथा तथा बहुतरसमुद्घोषणा परा प्रधाना ययोस्तौ । विनिर्गच्छता रोषेण सुदुर्दर्शौ दुर्निरीक्षौ । 'ईषद्दुस्सुषु—' इति खल् । कौचन बाडवप्रवरौ ब्राह्मणश्रेष्ठौ बहिस्सभातलं सभातलात् बहिः । 'अपपरिबहिरञ्चवः पञ्चम्या' इत्यव्ययीभावः । अदर्शीषातां दृष्टौ । 'दृशि प्रेक्षणे' इत्यस्मात् कर्मणि लुङ् ॥

ततश्चानन्तरञ्च सकलेषु सभाजनेषु किमेतदिति समाकुलेषु सत्सु अहं पुनः अहन्तु अनाकुल इव गाम्भीर्येणाव्याकुल इव समुपगम्य समीपं गत्वा नन्नम्यमानः पुनः पुनः प्रणमन् सन् । 'णमु प्रह्वत्वे' इत्यस्माद्धातोर्यङि 'नुगतोऽनुनासिकान्तस्य' इति नुगागमे ततः कर्तरि लटि शानचि मुगागमः । दुस्सहतरान् अत्यन्तदुस्सहान् । दुरुपसृष्टात् सहतेः खलन्तात् तरप् । भर्त्सनरवान् उपालम्भघोषान् उद्वमन् उद्गिरन् अतिरूषितेन अतिकोपेन दीप्रे प्रकाशमाने । 'नमिकम्पि—' इति रप्रत्ययः । अक्षिणी यस्य तत् । एतत् पूर्वदृष्टं द्विजवरद्वितयं ब्राह्मणश्रेष्ठयुग्मं किमिदमिति समप्राक्षं सम्यगपृच्छम् । 'प्रच्छ ज्ञीप्सायाम्' इत्यस्माद्धातोः कर्तरि लुङ् । तयोः पूर्वोक्तयोः विप्रवरयोरन्यतरः एकः संन्यगादीत् सम्यगवादीत् च । 'गद व्यक्तायां वाचि' इत्यस्मात् कर्तरि लुङ् ॥

मह्यं द्रोणदुघा त्वया पशुरियं दत्ता न दृष्टा चिरात्
तामन्विष्य च कृच्छ्रतोऽस्य भवने दृष्ट्वा निनीषौ मयि ।
चोरङ्कारमुपाह्वयन् नृपतिना दत्तेयमित्यालपन्
विप्रोऽयं समरुन्ध मां क इव भोश्चोरोऽत्र धात्रीपते ॥ १३

दानैः क्षीणं धनश्चेद्विरम विरम भोश्चौरिकां नारभेथाः
चोरो दत्तापहारान्नरक इति बुधम्मन्य नो मन्यसे किम् ।

**मह्यमिति** । हे राजन्, त्वया मह्यं दत्ता अर्पिता द्रोणदुघा । द्रोणं दोग्धीति द्रोणदुघा । 'दुहः कब्घश्च' इति कप् प्रत्ययः हस्य घश्च । इयं पशुः चिरात् न दृष्टा । मयि तां नष्टगवीं अन्विष्य मृगयित्वा कृच्छ्रतः कृच्छ्रेण आद्यादित्वात्तसिल् । अस्य विप्रस्य भवने गृहे दृष्ट्वा निनीषौ नेतुमिच्छति सति । 'णीञ् प्रापणे' इत्यस्मात् 'धातोः कर्मणः-' इति सनन्तात् 'सनाशंस-भिक्ष-' इति उप्रत्ययः । अयं विप्रः चोरंकारं चोरशब्दमुच्चार्य । 'कर्मण्याक्रोशे कृञः खमुञ्' इति खमुञि 'खित्यनव्ययस्य' इति मुमागमः । धातूनामनेकार्थत्वादिह करोतिरुच्चारणार्थः । उपाह्वयन् शब्दापयन् । 'ह्वेञ् स्पर्धायां शब्दे च' इत्यस्मात् लटः शता । इयं पशुः नृपतिना राज्ञा दत्ता इति आलपन् वदन् मां समरुन्ध संरुद्धवान् । सम्पूर्वात् 'रुधिर् आवरणे' इत्यस्मात् कर्तरि लङ् । भोः धात्रीपते । अत्र आवयोरित्यर्थः । क इव चोरः तस्करः । त्वमेव कथयेति शेषः ॥

**दानैरिति** । भो राजन्, दानैः सत्पात्रप्रतिपादनैः धनं द्रव्यं क्षीणं नष्टम् । 'क्षि क्षये' इत्यस्मादकर्मकात् कर्तरि क्तप्रत्यये 'निष्ठायामण्यदर्थे' इति दीर्घे 'क्षियो दीर्घात्' इति निष्ठातस्य णत्वम् । चेत् यदि विरम विरम उपारमोपारम । 'व्याङ्परिभ्यो रमः' इति परस्मैपदम् । 'आबाधे च' इति द्वित्वम् । दानं न कर्तव्यमिति भावः । चौरिकां चौर्यम् । मनोज्ञादित्वाद् वुञ् । टापि 'प्रत्ययस्थात्-' इतीत्वम् । न आरभेथाः नोपक्रमेथाः । 'रभ राभस्ये' इत्यस्मात् कर्तरि लिङ् । बुधमात्मानं मन्यते बुधम्मन्यः । 'आत्ममाने खश्च' इति खशि 'अरुर्द्विषदजन्तस्य' इति मुमागमः । तस्य सम्बुद्धिः । बुधम्मन्य

**धर्मैर्निर्मीयमाणैर्मनसि विमलतासम्भवेऽलम्भि किं भोः**
**कौम्भील्यं दाम्भिकस्त्वं सकलमतनुथा निश्चितं दुश्चरित्रात् ॥ १४ ॥**

**तदिदमाकर्ण्य विदीर्णकर्णहृदयोऽहं तूर्णमेव गोसङ्ख्यावेक्षणगोसङ्ख्यपरिशिक्षणादिषु विशेषनियुक्तं सचिवमाहूय परिपृष्टवानस्मि ॥**

---

पण्डितम्मन्य, दत्तस्य समर्पितस्य अपहारादपहरणाद्धेतोः घोरः भयङ्करः नरको निरय इति नो मन्यसे किं न जानीषे किम्। अन्यथा कथं दत्तापहारी भवेरिति भावः। निर्मीयमाणैः अनुष्ठीयमानैः। 'मा माने' इत्यस्मात् निरुपसृष्टात् कर्मणि लटि शानचि यकि 'घुमास्था–' इति ईत्वम्। धर्मैः सुकृतैः मनसि हृदये विमलतायाश्शुद्धेः सम्भवे सति कौम्भील्यं चौर्यम्।

'कुम्भीलः स्थूलमीने स्याच्चोरपन्नगयोरपि'।

इति रत्नमाला। किं कस्मात् अलम्भि लब्धम्। लभेः कर्मणि लुङ्। 'विभाषा चिण्णमुलोः' इति नुमागमः। कर्मभिः शुद्धचित्तस्य पापाभिनिवेशासम्भवादिति भावः। त्वं दाम्भिकः। दम्भेन चरतीति दाम्भिकः। 'चरति' इति ठक्।

'कपटोऽस्त्री व्याजदम्भोपधयश्छद्मकैतवे।'

इत्यमरः। सकपटाचारस्सन्नित्यर्थः। सकलं सर्वम्। नित्यनैमित्तिकमित्यर्थः कर्म अतनुथाः कृतवान्। तनोतेः कर्तरि लङ्। एतत् कथमिति चेदुच्यते — दुश्चरित्रात् दत्तापहाररूपात् दुष्कर्मणः। निश्चितं निर्णीतम् ॥

**तदिति।** तदिदं विप्रवचनं आकर्ण्य श्रुत्वा विदीर्णे विदलिते कर्णहृदये श्रोत्रमनसी यस्य सोऽहं तूर्णं अविलम्बितं एव। गोसङ्ख्यावेक्षणं पशुसङ्ख्यापरीक्षणं गोसङ्ख्यपरिशिक्षणं पशुपालपरिपालनञ्च एते आदौ येषु तेषु कर्मसु विशेषनियुक्तं विशेषेणाधिकृतम्।

'गोपे गोपालगोसङ्ख्यगोधुगाभीरवल्लवाः।'

इत्यमरः। सचिवमाहूय परिपृष्टवान् अनुयुक्तवानस्मि ॥

**स्वयमागतैव माहा हाहा मोहान्न चिन्तिता नु मया ।**
**स्वप्नेऽपि नापि गोपैर्मयापि मुषितेति सोऽपतत्पदयोः ॥ १५ ॥**

**ततश्च सप्रमादममुं क्षिप्रमेवाधिकाराद्विप्रवास्य विप्रवर्यौ सप्रणामं पुनरप्यसान्त्वयम् ॥**

**'गौरेषा स्वयमागतैव, भगवन्', 'स्वामी न किं मार्गितः'**
**'मौर्ख्यान्मन्त्रिजनस्य', 'मन्त्रिचरितं सर्वं नृपस्यैव भोः' ।**

**स्वयमिति** । माहा इयं गौः । 'उस्रा माहा च शृङ्गिणी' इत्यमरः । स्वयमेवागता न केनचिदानीता । किन्तु मया मोहात् अज्ञानात् न चिन्तिता परगवीयमिति विचारिता । गोपैः मयापि स्वप्नेऽपि न मुषिता चौर्येणाहृता । इत्युक्त्वेति शेषः । स सचिवः पदयोः राज्ञश्चरणयोः अपतत् पतितवान् । गीतिरियम् ॥

**तत इति** । ततश्चानन्तरञ्च सप्रमादं अनवधानम् । 'प्रमादोऽनवधानता' इत्यमरः । अमुं सचिवं क्षिप्रमेवाधिकाराद् विप्रवास्य प्रच्याव्य विप्रवर्यौ ब्राह्मणश्रेष्ठौ सप्रणामं सनमस्कारं यथा तथा पुनः भूयोऽपि असान्त्वयं अनुनीतवान् । 'साम सान्त्वमुभे समे' इत्यमरः । सान्त्वशब्दात् 'तत्करोति–' इति णिजन्तात् कर्तरि लङ् ॥

**गौरिति** । इदं पद्यमुक्तिप्रत्युक्तिरूपम् । भगवन् षाड्गुण्यसमग्र, एषा गौः इयं पशुः स्वयमेवागता । न मदीयैरपहृतेति भावः । इति राज्ञो वचनम् । स्वामी गोपतिः किं कस्मात् न मार्गितः नान्वेषितः । गोः स्वयमागतत्वेऽपि तत्स्वामिनोऽनन्वेषणात् अन्यस्मै प्रदानाच्च त्वमेव जाल्म इति भावः । इति विप्रयोर्वचनम् । मन्त्रिजनस्य सचिवजनस्य मौर्ख्यात् बालिशत्वात् । मौढ्यादिति यावत् । 'मूर्खवैधेयबालिशाः' इत्यमरः । स्वामी न मार्गित इति शेषः । नायं ममापराध इति भावः । इति राज्ञो वचनम् ।

'मौर्ख्यं मेऽस्तु तथापि नैव मुषितं', 'कश्चोरतां त्वां वदेत्' ।
'चोरोऽप्यस्मि तथापि साध्यमुभयोर्ब्रूतं' 'न जानासि किम्' ॥ १६ ॥

'प्राग्दत्ता हि ममैव गौरहममूं नेष्ये', 'पुनर्दानतः
प्राग्दानं व्यवबाधितं', 'मम धनं नान्येन दत्तं भवेत्' ।

अथ विप्रावाहतुः — भो राजन् , मन्त्रिचरितं सचिवकृतं सर्वं नृपस्यैव । राजसम्बन्ध्येवेत्यर्थः । सचिवस्य स्वाम्यायत्तत्वात् तवैव मौर्ख्यमिति भावः । राजाह — मौर्ख्यं मे ममास्तु तथापि नैव मुषितं स्तेयं कृतम् । मयेति शेषः । भावे निष्ठा । गोधनमिति कर्माध्याहारे कर्मणि वा, धातूपात्तव्यापाराश्रयस्यैव कर्तृत्वात् । स्वस्य चातथाभावादिति भावः । विप्रावाहतुः— कः त्वां चोरतां तस्करतां वदेत् कथयेत् । न कोऽपीत्यर्थः । गर्ह्यत्वादिति भावः । राजाह— अहं चोरस्तस्करोऽप्यस्मि । विप्रवचनस्य भूतार्थत्वादिति भावः । तथापि उभयोः युवयोः साध्यं करणीयम् । मयेति शेषः । ब्रूतं कथयतम् । 'ब्रूञ् व्यक्तायां वाचि' इत्यस्मात् कर्तरि लोट् । मम सर्वापराधं सोढ्वा मया युवयोः करणीयं कारयित्वा मां किङ्करीकुरुतमिति भावः । विप्रावाहतुः— हे राजन् , त्वं न जानासि किम् । जानास्येवेत्यर्थः । करणीयमिति शेषः । जानन्नपि सर्वं किमप्यजानान इवाभिनयसि । अहो तव कपटपाटवमिति भावः ॥

प्राग्दत्तेति । अयं श्लोकः प्राग्दानीयार्वाग्दानीयविप्रयोरुक्तिप्रत्युक्तिरूपः । हि यस्मात् गौः ममैव प्राक् पूर्वम् । प्राक्छब्दात् 'दिक्शब्देभ्यः सप्तमी—' इति विहितस्यास्तातेः 'अञ्चेर्लुक्' इति लुक् । दत्ता समर्पिता । सम्प्रदानत्वाविवक्षितत्वान्ममेति शेषे षष्ठी । यद्वा यस्मात् मह्यं प्रदत्ता तस्मात् गौर्ममैवेति योजना । अहममूं गां नेष्ये गृहं प्रापयिष्ये । 'णिञ् प्रापणे' इत्यस्मात् कर्तरि लिट् । इति पूर्वप्रतिगृहीतुर्वचनम् । पुनर्दानतः पश्चाद्दानतः । तृतीयान्तात्तसिः । प्राग्दानं पूर्वदानं व्यवबाधितं, विप्रतिषेधे परमिति न्यायात् । तस्मान्ममैवेयं गौरिति भावः । इति पश्चात्परिगृहीतुर्वचनम् । मम धनं अन्येन इतरेण दत्तं अन्यस्मै समर्पितं न भवेत् । अन्यधनस्य तदन्येन दातुमशक्यत्वात् स्वकीयस्यैव दानीयत्वाच्चेति स्वत्वनिवृत्तिपूर्वकपरस्वत्वापादनस्यैव दानशब्दार्थत्वात् पूर्वमेव निवृत्त-

'दत्तं नन्वमुनैव', 'नन्वपनयाद्दत्तं हि साधूभवेद्',
'राज्ञ्येवापनयो न मेऽस्ति', 'न तु गां मोक्ष्याम्यहं', 'नाप्यहम्' ॥ १७ ॥

'लक्षं गाः प्रददानि मुञ्चतमिमां', 'लक्षं कुतोऽमुष्य ते',
'शान्तं शान्तमघं, परीक्ष्य सुतरां दास्यामि लक्षाधिकम्' ।

स्वत्वस्य प्राप्तपरस्वत्वस्य च धनस्य तदसम्भवात् पुनर्दानमिति यदुक्तं तन्मिथ्यैव । तस्मान्ममैवेयमिति पूर्वस्य वचनम् । नन्वित्यामन्त्रणे । हे विप्र, अमुना राज्ञैव दत्तम् । मह्यमिदं धनमिति शेषः । प्रत्यक्षदातृकस्य दानस्यान्यसाक्ष्यनपेक्षत्वान्मयोक्तं सत्यमेवेति भावः । इत्युत्तरस्य वचनम् । नन्विति पूर्ववत् । अपनयात् प्रमादात् दत्तं साधूभवेत् हि युक्तं भवेदेवेति सावहित्थमिदं वचनम् । 'हि हेतावववधारणे' इत्यमरः । न कदाचिदपि साधु भवेदित्याशयः । स च च्विप्रत्ययेनाविष्कृतः । असाधु साधु भवेदित्यर्थे 'कृभ्वस्तियोगे' इत्यादिना च्वौ, 'च्वौ च' इति दीर्घः । इति पूर्वस्य वचनम् । राज्ञि नृगे एवापनयः अन्यायः मे नास्ति तस्मान्ममैवेयमित्युत्तरस्य वचनम् । अहन्तु गां न मोक्ष्यामि न त्यक्ष्यामि । 'मुच मोक्षणे' इत्यस्मात् कर्तरि लृट् । इति पूर्वस्य वचनम् । अहं न मोक्ष्यामीत्युत्तरस्य ।

अनन्तरं राजाह— लक्षमिति । लक्षं शतसहस्रम् । 'विंशत्याद्याः सदैकत्वे' इत्येकवचनम् । गाः पशून् पददानि वितराणि । 'डु दाञ् दाने' इत्यस्मात् कर्तरि लोट् । युवाभ्यामिति शेषः । युवामिमां गां मुञ्चतं त्यजतम् । त्यजतेः कर्तरि लोट् । इति राज्ञो वचनं श्रुत्वा विप्रावूचतुः — हे राजन्, अमुष्य ईदृशस्य एकस्य गोरभावेन विप्रगवीं परिमुष्य ददत इत्यर्थः । ते तव कुतो लक्षं गावो लभ्येरन्निति शेषः । पुनरपि परगवीहरणायैव प्रवर्तस इत्याकूतम् । यद्वा कुतो मुष्यते कस्मादपह्रीयत इति योजना । ततो राजाह — शान्तं शान्तमघमिति सानुशयोक्तिः । हे विप्रौ, सुतरां परीक्ष्य सम्यक् परिशोध्य लक्षाधिकं शतसहस्राधिकम् । गोकुलमिति शेषः । दास्यामि ददातेः कर्तरि लृट् । ततो

'दत्तं रक्ष किमूर्ध्वदानकथया,' 'तत्राभ्युपायः कथम्'
'पृच्छैतत्सचिवान्' 'अभीष्टमखिलं कुर्वे' 'दिशेष्टामिमाम्' ॥ १८ ॥

इत्थमशान्तरोषाक्रान्तिदुस्सान्त्वतमौ महान्तौ तौ तपोधनौ निरीक्ष्य भग्नाविग्नहृदयोऽहमखिलेश्वरश्शरणं नमः क्षमासुरेभ्य इति प्रवणमूर्धा बद्धाञ्जलिर्जोषमतिष्ठम् ॥

तावच्च —

विप्रावूचतुः – हे राजन्, दत्तं पूर्वप्रतिपादितं वस्तु रक्ष । प्रतिगृहीतृसात्कुर्विति भावः । ऊर्ध्वदानकथया उपरिदानकथनेन किम् । दत्तमेवाशास्वहे न त्वयाधिकं देयमिति भावः । राजाह– कः तत्र दत्तरक्षणे अभ्युपायः । कथं युवाभ्यामेव उपायः कथ्यतामिति भावः । विप्रावूचतुः– हे राजन्, सचिवान् मन्त्रिणः एतत् करणीयं पृच्छ अनुयुङ्क्ष्व । पृच्छतेः कर्तरि लोट् । दुहादिकत्वात् द्विकर्मत्वम् । मन्त्रिण एवोपायकुशलाः प्रष्टव्याः नावामुपायं जानीवः । राजाह - अखिलमभीष्टं कुर्वे साधयामि । करोतेः कर्तरि लट् । कथयतं तत् । किमनेन अभ्युपायप्रश्नेनेति भावः । विप्रावूचतुः– एवञ्चेत्तर्हि इष्टामिमां गां दिश वितर । 'दिश अतिसर्जने' इत्यस्मात् कर्तरि लोट् ॥

इत्थमिति । इत्थमनेन प्रकारेण अशान्तया अक्षीणया रोषाक्रान्त्या क्रोधावेशेन दुस्सान्त्वतमौ दुरनुनेयतमौ महान्तौ महानुभावौ तौ तपोधनौ तपस्विनौ निरीक्ष्य दृष्ट्वा भग्नाविग्नहृदयः परिमृदितभीतमानसः अहं अखिलेश्वरः शरणं गतिः क्षमासुरेभ्यो ब्राह्मणेभ्यो नमः इति प्रवणमूर्धा प्रणम्रशिराः बद्धाञ्जलिः कृताञ्जलिः सन् जोषं तूष्णीम् । 'तूष्णीमर्थे सुखे जोषम्' इत्यमरः । अतिष्ठं स्थितवान् । तिष्ठतेः कर्तरि लङ् ॥

तावच्च तदानीञ्च । अनन्तरवृत्तान्तमाह–

पूर्वं मुमोषिथ पुनर्न हृतो विवादो
धत्से च युक्तिविकलः कृकलासभावम् ।
तद्भूप पाप कृकलासवपुर्भवेति
शप्त्वा गतौ च लघु तौ कुपितौ द्विजेन्द्रौ ॥ १९ ॥

तदा च सभानिषण्णेषु विषण्णमनस्सु सुमनस्सु सत्रासपरतन्त्रेषु च मन्त्रीश्वरेषु तरङ्गितशोकसिन्धुषु बन्धुषु सोऽहमपि शोकवेगान्मूर्च्छामिव भजन्नाच्छादितविकृतिर्भवनाभ्यन्तरमासाद्य ससन्तापां दुरन्तां विचिन्तामविन्दन्तमाम् ॥

पूर्वमिति । हे राजन्, त्वं पूर्वं पुरा मुमोषिथ चोरयामासिथ । मुष्णातेर्लिट् । पुनः पश्चात् विवादः विप्रकलहः न हृतः न परिहृतः । त्वयेति शेषः । किञ्च युक्तिविकलस्सन् कार्याकार्यविवेकक्षमविचारशून्यस्सन् कृकलासभावं कृकस्य कण्ठस्य लासश्चालनं स एव भावः चेष्टा तं कृकलासभावं ज्ञानशून्यत्वात् सरटत्वञ्च धत्से दधासि । दधातेः कर्तरि लट् । तत् तस्मात् मोषणात् विवादाहरणात् कृकलासभावधारणाच्च हेतोः हे भूप पाप नृशंस । न तु भूपपापेत्येकं पदम् । 'पापाणके कुत्सितैः' इति पापशब्दस्य पूर्वनिपातप्रसङ्गात् । त्वं कृकलासवपुः सरटशरीरः भव । 'सरटः कृकलासः स्यात्' इत्यमरः । भवतेर्लोट् । इत्थं शप्त्वा शापं कृत्वा तौ द्विजेन्द्रौ कुपितौ सन्तौ लघु शीघ्रं गतौ च । स्वगृहमिति शेषः ॥

तदेति । तदा च तदानीञ्च सभानिषण्णेषु सभासीनेषु विषण्णमनस्सु दुःखितहृदयेषु सत्सु सुमनस्सु विद्वत्सु, सत्रासपरतन्त्रेषु भयपरवशेषु सत्सु मन्त्रीश्वरेषु सचिवप्रवरेषु, च बन्धुषु बान्धवेषु च तरङ्गितशोकसिन्धुषु प्रवृद्धशोकसागरेषु, सोऽहमपि शोकवेगात् मूर्च्छां भजन् प्राप्नुवन्निव आच्छादिता अप्रकाशिता विकृतिर्विकारो येन सः तथाभूतस्सन् भवनाभ्यन्तरमन्तःपुरमासाद्य प्राप्य ससन्तापां सन्तापसहितां दुरन्तां दुरवसानां विचिन्तां विचारम् अविन्दन्तमां प्रापन्तमाम् । 'विद लाभे' इत्यस्माल्लङि ततः 'तिङश्च' इति तमपि 'किमेत्तिङ' इत्यामुप्रत्ययः ॥

धिग्धिङ्मां किमिदं कुतो नु समभूद्धर्मैकनिष्ठोऽप्यहम्
पापिष्ठां बत योनिमेमि कियतः कालस्य घोरव्यथाम् ।
सच्छिद्रं मम किन्तु धर्ममखिलं तन्नैव सम्भाव्यते
सर्वं विष्णुसमर्पितं खलु कृतं जाने न कोऽयं विधिः ॥ २० ॥

दाने विप्रगवां विषादहृदये किं किं कृतं नो मया
किञ्चिद्रक्षणशिक्षणादि च भुवो नोपेक्षितं लक्ष्यते ।

धिगिति । धिक् धिक् माम् । 'आबाधे च' इति द्वित्वम् । 'धिगुपर्यादिषु त्रिषु' इति द्वितीया । निन्द्योऽहमित्यर्थः ।

'धिङ्निर्भर्त्सननिन्दयोः' इत्यमरः । किं कुत्सितं इदं दुःखं कुतः कस्मात् कारणात् समभूत् समजनि । भवतेर्लुङ् । नन्विति वितर्के । कारणं न जान इति भावः । धर्मैकनिष्ठोऽपि सुकृतैकपरायणोऽपि अहं पापीयसीम् । 'अतिशायने तमबिष्ठनौ' इतीष्ठनि टिलोपः । योनिमुत्पत्तिमेमि गच्छामि । 'इण् गतौ' इत्यस्मात् कर्तरि लट् । का सङ्ख्या परिमाणमस्य कियान् तस्य कियतः बहोरित्यर्थः । 'किमिदम्भ्यां वो घः' इति वतुप्, वस्य च घः । 'इदंकिमोरीश्की' इति किमः क्यादेशः । कालस्य समयस्य घोरव्यथां असह्यपीडां एमि । यद्वा घोरव्यथामिति योनिविशेषणम् । ममाखिलं धर्मं सच्छिद्रं सप्रत्यवायं किन्तु । कथमन्यथा ईदृशी दशेति भावः । तत् पूर्वं नाशङ्कितं नैव सम्भाव्यते सम्भावयितुं न शक्यते । भावयतेः कर्तरि लट् । सर्वं कृतं मदनुष्ठितं विष्णुसमर्पितम् । खल्वित्यवधारणे । विष्णुसमर्पितमेवेत्यर्थः । अयं विधिः एतादृशी नियतिः कः किं प्रकार इत्यहं न जाने वेद्मि । जानातेः कर्तरि लट् ।

दान इति । दाने गोदानकर्मणि विप्राश्च गावश्च विप्रगावः तासां विषादहृत् दुःखहारि किं किं कर्म मया न कृतम् । सर्वं कृतमेवेत्यर्थः । प्रतिगृहीतृदानीयानां यथा विषादो न भवेत् तथैवानुष्ठितं मयेति भावः । भुवो भूमेः रक्षणशिक्षणादि पालनशासनादि च किञ्चिदीषदपि उपेक्षितं मयासम्यगनुष्ठितं न लक्ष्यते न ज्ञायते । 'लक्ष दर्शने' इत्यस्मात् कर्मणि लट् । उरुदक्षिणेषु

यज्ञेष्वप्युरुदक्षिणेषु न परं वैकल्यमाकल्यते
यत्प्रीत्यै सकलं कृतं स भगवान् जानातु नारायणः ॥ २१ ॥

पापिष्ठो न मया समोऽस्ति भुवने भूयिष्ठधर्मार्जनाद्
द्राघिष्ठं सुरलोकमीप्सुरगमं ही ही दशामीदृशीम् ।
प्राज्यं राज्यमपास्य दास्यमुदयास्यं चेद्दशास्यं हरेः
सान्द्रानन्दमयं विमोक्षमचिरादैष्यं न दूष्यं भवम् ॥ २२ ॥

बहुदाक्षिणेषु यज्ञेष्वपि परमत्यन्तं वैकल्यं विकलत्वम् । अङ्गादिहीनतेत्यर्थः । न आकल्यते न सङ्ख्यायते । 'कल सङ्ख्याने' इत्यस्मात् कर्मणि लट् । यस्य भगवतः प्रीत्यै सम्मदाय सकलं कृतम् । मयेति शेषः । स भगवान् नारायणो जानातु बुद्ध्यताम् । न किञ्चिदपि मया ज्ञानपूर्वकमकार्यं कृतं तत्र भगवान् नारायण एव साक्षीति भावः ॥

भुवने लोके मया समः सदृशः नास्ति । भूयिष्ठस्य बहुतमस्य । बहुशब्दादिष्ठनि 'इष्ठस्य यिट् च' इति बहुशब्दस्य भूयादेशः यिडागमश्च । धर्मस्य सुकृतस्यार्जनात् सम्पादनात् द्राघिष्ठं दीर्घतमं सुरलोकं स्वर्गमीप्सुः आप्तुमिच्छुः । आप्नोतेः 'धातोः' इति सनि 'आप्ज्ञप्यृधाम्' इति अच ईदादेशे 'अत्र लोप' इत्यभ्यासलोपे 'सनाशंस' इत्युप्रत्ययः । अहमीदृशीं दशामतिकष्टामवस्थामगमं प्रापम् । गच्छतेर्लुङि च्लेरङादेशः । इह इष्टार्थं प्रति समुद्यमेऽपि तदप्राप्ते-स्तद्विपरीतप्राप्तेश्च विषमालङ्कारः ।

'अनिष्टस्याप्यवाप्तिश्च तदिष्टार्थसमुद्यमाद्'

इति लक्षणात् । प्राज्यं राज्यं अपास्य त्यक्त्वा अशास्यं अक्षय्यं हरेर्विष्णोर्दास्यं परिचर्यां उदयास्यं उदगमिष्यं चेत् सान्द्रानन्दमयं घनानन्दप्रचुरं विमोक्षं कैवल्यं अचिराद् अविलम्बेन ऐष्यं अगमिष्यम् । 'इण् गतौ' इत्यस्मात् कर्तरि लृङ् । 'लिङ्निमित्ते लृङ् क्रियातिपत्तौ' इत्युभयत्र लृङ् । दूष्यं निन्द्यं भवं जन्म नैष्यं न प्राप्स्यामीत्यर्थः । जन्मान्तरपापवशान्मम काम्यकर्मकरणे बुद्धिः प्रावर्तत भगवदाराधने च न प्रावर्तत तस्मादीदृशदशा-

धिग्धार्मिकत्वमिह धिङ्नृपतिश्रियं मे
धिक् क्षोणिरक्षणविचक्षणतां निरर्थाम् ।
यद्विप्रशापमपि हन्त दुरन्तमन्ते
कष्टां जुगुप्सितमलप्सि च जन्तुभावम् ॥ २३ ॥

इत्थमुद्दामचिन्ताभिरुद्दीपितेन दग्धाशेषमदाङ्कुरे विस्तारितवित्ता-देवैराग्यगुणविभूतिना तत्तादृशशोकमयेन सन्तापार्चिषा तप्ताशये लुप्तनिद्रे

पन्नोऽहं पापीयसामग्रणीरिति भावः । अत्र पूर्ववाक्यार्थं प्रति उत्तरवाक्यार्थानां हेतुत्वात् काव्यलिङ्गमलङ्कारः ।

'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम् ।'

इति लक्षणात् । विषमालङ्कारस्त्वङ्गम् । अनयोरङ्गाङ्गिभावेन संसृष्टिः ॥

**धिगिति** । मे मम धार्मिकत्वं धर्मचारित्वं धिक् । धर्मशब्दात् 'धर्मं चरति' इति ठक् । इहास्मिन् लोके नृपतिश्रियं राजलक्ष्मीं धिक् । निरर्थां निष्फलां क्षोणिरक्षणविचक्षणतां भूमिपरिपालनकौशलीं च धिक् । अत्र सर्वत्र 'धिगुपर्यादिषु' इति द्वितीया । धार्मिकत्वादिकं निन्द्यमेवेत्यर्थः । तदेव समर्थयति- यद् यस्माद् अन्ते अवसाने दुरन्तं दुरवसानं कष्टं कृच्छ्रं विप्रशापं जुगुप्सितं निन्दितं जन्तुभावं कृकलासजन्म च अलप्सि अवापम् । 'डु लभष् प्राप्तौ' इत्यस्माद् धातोः कर्तरि लुङ् ॥

**इत्थमिति** । इत्थं उद्दामाभिः प्रभूताभिः चिन्ताभिः पतनध्यानैः उद्दीज्वलितेन । विस्तारिता विपुलीकृता वित्तादिषु अर्थपुत्रमित्रादिषु वैराग्यगुणविभूतिः नैराश्यगुणसम्पद् येन तेन तत्तादृशशोकमयेन तत्तादृशाद् अतिदुस्सहात् शोकात् आगतः तत्तादृशशोकमयः । 'तत आगतः' इत्यधिकारे 'मयट् च' इति मयट्प्रत्ययः । सन्तापार्चिषा सन्तापानलेन दग्धः । अर्चिश्शब्देन विषयनिगरणात् रूपकातिशयोक्तिरलङ्कारः । दग्धः प्लुष्टः अशेषमदाङ्कुरः सर्वाहङ्कारबीजं यस्य तस्मिन्, तप्त आशयो मनो यस्य तस्मिन्, अत एव लुप्तनिद्रे निरस्तस्वप्ने मयि

मयि सप्ताष्टान्यहानि वर्तमाने प्रत्युत्पन्नकरुणस्य भक्तार्तिहृतो भगवत एवानुग्रहाद् बद्धानुतापाविव वक्त्रोल्लसदयथापुरभावौ प्रत्यागतौ तावेव पृथ्वीसुरवरप्रवरौ ॥

दृष्ट्वा च तौ सम्भृतसम्भ्रमोऽहं
बद्धाश्रुरद्धा पदयोरपप्तम् ।
वर्धस्व पृथ्वीश गताखिलार्ति-
रित्याशिषश्चोचतुराकुलौ तौ ॥ २४ ॥

आश्वेवाश्वासभाजं मां शेश्वीयितकृपाभरौ ।

सप्ताष्टानि सप्त वा अष्ट वा सप्ताष्टानि । 'सङ्ख्ययाव्यय–' इति बहुव्रीहिसमासे 'बहुव्रीहौ सङ्ख्येये' इति समासान्तो डच् । अहानि दिवसानि । 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । वर्तमाने सति प्रत्युत्पन्नकरुणस्य सञ्जातकारुण्यस्य भक्तार्तिहृतः सेवकदुःखापहारिणः भगवतः श्रीकृष्णस्यैवानुग्रहाद् बद्धानुतापाविव कृतानुशयाविव वक्त्रे मुखे उल्लसत् प्रकाशमानः अयथापुरभावः अयथापुरावस्था ययोस्तावेव पूर्वमागत्य दत्तशापावेव पृथ्वीसुरवरौ ब्राह्मणश्रेष्ठौ प्रत्यागतौ पुनरप्यागतौ ॥

दृष्ट्वेति । किञ्च तौ दृष्ट्वा सम्भृतसम्भ्रमः धृतत्वरः बद्धाश्रुः सन्नद्धाश्रुः सन् पदयोः चरणयोः अपप्तं पतितः । 'पत्लृ गतौ' इत्यस्माद्धातोः कर्तरि लुङि 'पुषादिद्युताद्यॢदितः परस्मैपदेषु' इति च्लेरङि 'पतः पुम्' इति पुमागमः । तौ विप्रौ चाकुलौ दयाकुलौ सन्तौ हे पृथ्वीश राजन् गताखिलार्तिः अपेतसमस्तदुःखः वर्धस्व एधस्व । वर्धतेः कर्तरि लोट् । इत्याशिषमाशीर्वादमूचतुः उक्तवन्तौ । 'वच परिभाषणे' इत्यस्माद् लिटि 'वचिस्वपियजादीनां किति' इति सम्प्रसारणे 'लिट्यभ्यासस्य' इति अभ्यासस्य सम्प्रसारणे दीर्घः ॥

आश्विति । आशु शीघ्रं आश्वासभाजं समाधानभाजं मां शेश्वीयितः अतिप्रवृद्धः । श्वयतेर्यङन्तात् कर्तरि क्तः । 'विभाषा श्वेः' इति सम्प्रसारणा-

भूसुरौ व्यासरद्भिर्बाष्पभासुरौ पुनरूचतुः ॥ २५ ॥

हे सत्यवद्यनिरवद्य वदान्यमौले
ब्रह्मण्य गुण्यतम पुण्यनिधे नरेन्द्र ।
हन्तावयोरनुपजातचरीमवार्यां
दैवप्रणुन्नकुमतिं क्षमतां मुकुन्दः ॥ २६ ॥

भावः । कृपाभरः कारुण्यातिशयः ययोस्तौ भूसुरौ ब्राह्मणौ व्यासरद्भिः प्रवहद्भिः बाष्पैरश्रुभिः भासुरौ दीप्यमानौ सन्तौ पुनरूचतुः उक्तवन्तौ । 'वच परिभाषणे' इत्यस्माद् लिट् ॥

हे सत्यवद्येति । सत्यस्य वदनं सत्यवद्यम् । सत्यवचनमित्यर्थः । 'वदस्सुपि क्यप् च' इति चकाराद् भावे यत् । तेन निरवद्य निरस्तावद्य । 'अवद्यपण्यवर्या' इत्यादिनावद्यशब्दो गर्ह्ये निपातितः । तस्य सम्बुद्धिः सत्यवद्यनिरवद्येति । वदान्यमौले दानशौण्डशिरोमणे ।

'स्युर्वदान्यस्थूललक्षदानशौण्डा बहुप्रदे'

इत्यमरः । ब्रह्मण्य ब्राह्मणहित । 'तस्मै हितम्' इति यत् । गुण्यतम गुणाः अस्य सन्तीति गुण्यः अतिशयेन गुण्यः गुण्यतमः तस्य सम्बुद्धिः गुण्यतम । 'अन्येभ्योऽपि दृश्यते' इति मत्वर्थीययबन्तात् अतिशायने तमप् । पुण्यनिधे सुकृतशेवधे । हे नरेन्द्र राजन् । हन्तेति विषादे ।

'हन्त हर्षेऽनुकम्पायां वाक्यारम्भविषादयोः' ।

आवयोः अनुपजातचरीं अभूतपूर्वाम् । 'भूतपूर्वे चरट्', 'टिड्ढाणञ्' इत्यादिना ङीप् । अवार्यां अवारणीया दैवेन विधिना प्रणुन्ना प्रेरिता या कुमतिः दुर्बुद्धिः तां मुकुन्दः नारायणः क्षमतां तितिक्षताम् । प्रशान्तचित्तयोरावयोरेवंविधे राजनि एवंविधशापदा मतिः दैवकृतैव । 'दैवाधीनं जगत्सर्वम्' इति वचनात् । तत् सर्वान्तर्यामी भगवान् क्षमतामिति भावः ॥

आवां खल्वविज्ञातोत्पतिते स्वल्पेऽपि तवापराधे बहु कुप्यन्तौ शप्यन्तौ पुरान्निरेत्य सद्यस्समुद्यदनुतापभराक्रान्तौ निजनिजनिशान्तमासाद्य ततोऽपि प्रतिक्षणपरिक्षुभितदुस्सहानुतापनिस्सहीकृतौ स्वस्वखेदं सम्मिलितौ भूत्वा सम्मन्त्र्य भाविकालचरितञ्च दिव्यदृशा ददृशिवांसौ तव क्षुद्रजन्मनोऽपि भद्रावहतारूपं शापमोक्षं प्रदातुमायातौ ॥

आनर्तेषु कुशस्थलीति विदिते स्थाने गतोपद्रवे
कूपे त्वं कृकलास एधि गलितक्षुत्तृड्भयादिव्यथः ।
नित्योदित्वरविष्णुचिन्तनसदातृप्तश्च कालात्पुन-
स्तत्र द्वारवतीं करिष्यति पुरीं कृष्णावतारो हरिः ॥२७॥

आवामिति । आवां खलु अविज्ञातः अविचारितश्चासावुत्पतितश्च तस्मिन् स्वल्पे अल्पीयस्यपि तवापराधे आगसि बहु यथा तथा कुप्यन्तौ रोषं कुर्वन्तौ । 'कुप क्रोधे' इत्यस्मात् दैवादिकाल्लटः शत्रादेशः । शप्यन्तौ शापं कुर्वन्तौ । 'शप आक्रोशे' इत्यस्माल्लटः शत्रादेशः । पुरान्नगरान्निरेत्य निर्गत्य सद्यस्तदानीमेव समुद्यता समुद्गच्छता । समुत्पूर्वादिणो लटश्शत्रादेशः । अनुतापभरेण पश्चात्तापातिशयेनाक्रान्तौ व्याप्तौ । क्रमतेर्निष्ठायाम् 'अनुनासिकस्य क्वि' इति दीर्घः । निजनिजनिशान्तं स्वस्वभवनं आसाद्य प्राप्य ततोऽपि अनन्तरमपि प्रतिक्षणं क्षणे क्षणे परिक्षुभितेन दुस्सहेनासह्येनानुतापेन पश्चात्तापेन निस्सहीकृतौ अक्षमीकृतौ स्वस्वखेदं निजनिजदुःखं सम्मिलितौ समागतौ भूत्वा सम्मन्त्र्य भाविकालचरितं अवश्यम्भाविकालवृत्तिञ्च दिव्यदृशा ज्ञानचक्षुषा ददृशिवांसौ दृष्टवन्तौ । दृशेः क्वसाविडागमः । तव ते क्षुद्रजन्मनोऽपि भद्रावहतारूपं सुखावहत्वलक्षणं शापमोक्षं शापावसानं प्रदातुं आयातौ आगतौ ॥

आनर्तेति । आनर्तेषु आनर्ताख्येषु देशेषु कुशस्थली इति विदिते गतोपद्रवे निरुपप्लवे स्थाने कूपे त्वं गलिता निर्गता क्षुत्तृड्भयादीनां क्षुत्पिपासाभीत्यादीनां व्यथा पीडा यस्मात् सः । नित्यं सदा उदित्वरेण उद्भूतेन 'इण्नशजिसर्तिभ्यः क्वरप्' इति क्वरप् । विष्णुचिन्तनेन हरिध्यानेन सदा तृप्तः कृकलासः एधि भव । अस्तेर्लोटि 'घ्वसोरेद्धावभ्यासलोपश्च' इत्येत्वम् । तृ

स त्वामुत्तारयेद्देवो विश्वकामदुघो विभुः ।
इत्युक्तोऽहं कृतार्थात्मा शापमप्यस्मरं वरम् ॥ २८ ॥

पूर्वप्रतिगृहीत्रे च प्राचिकीं नैचिकीं दिशन् ।
द्वौ चातिमानसम्प्रीतौ सम्प्रेष्य मुदितोऽभवम् ॥ २९ ॥

पूर्वस्मादपि शान्तप्रसन्नचेता वसंश्च तदवसरे ।
दिष्टान्तमागतोऽहं वपुरिह कृकलासमुद्रमद्राक्षम् ॥ ३० ॥

अत्राप्यहं भवदनुस्मृतिविस्मृतोरु-
कालक्रमो विगलितव्यसनं शयानः ।

कुशस्थल्यां पुनः कालात् कस्माच्चित् कालात् परं कृष्णावतारः हरिः श्रीकृष्णः द्वारवतीं पुरीं नगरीं करिष्यति निर्मास्यति ॥

**स इति ।** विश्वकामदुघः सर्वाभीष्टप्रदः । 'दुहः कब्घश्च' इति कब्धादेशौ । विभुः व्यापकः स देवः श्रीकृष्णस्त्वामुत्तारयेत् शापमोक्षं कुर्यात् । इति इत्थं उक्ते सति अहं कृतार्थात्मा कृतार्थः चरितार्थः आत्मा यस्य सः सन् शापमपि वरं अभीष्टं अस्मरं स्मृतवान् । स्मरतेर्लङ् ॥

**पूर्वेति ।** पूर्वप्रतिगृहीत्रे प्रथमप्रतिग्रहकर्त्रे प्राचिकीं प्राचीनां प्रागदत्तामित्यर्थः । कालाट्ठञ् । 'टिड्ढाणञ्' इति दीर्घः । नैचिकीं प्रशस्तगवीं दिशन् ददत् अतिमानसम्प्रीतौ बहुमानसन्तुष्टौ द्वौ विप्रवरौ सम्प्रेष्य मुदितः सन्तुष्टः अभवम् । भवतेर्लङ् ॥

**पूर्वस्मादिति ।** पूर्वकालादपि शान्तं प्रसन्नं चेतो यस्य सः सन् वसन् । स्वगृह इति शेषः । अहं तदवसरे आयुरवसानकाले दिष्टान्तं मरणमागतः प्राप्तः सन् इह अस्मिन् कूपे कृकलासमुद्रं सरटचिह्नं वपुः शरीरमद्राक्षं दृष्टवान् । दृशेर्लुङि च्लेः सिचि अमागमे वृद्धिः ॥

**अत्रेति ।** अत्रापि अस्मिन् कूपेऽपि भवतस्तवानुस्मृत्या निरन्तरस्मरणेन

अन्वग्रहीषि भवताद्य च सर्वमेत-
न्मन्ये तवैव करुणालसितं परात्मन् ॥३१॥

नारायणस्त्वमसि पूर्ण इहावतीर्णो
नृणां भवार्तिहरणाय स मे प्रसीद ।
स्वर्गेऽपि ते पदरजांस्यतिदुःस्मराणि
नो विस्मराणि सकलाशुभघस्मराणि ॥ ३२ ॥

स्मर्तासि नित्यमयि मां दिवि भुङ्क्ष्व भोगान्
सर्तासि भोगविरतौ च पदं मदीयम् ।

विस्मृतः उरुकालक्रमः बहुकालपरिवृत्तिः येन सः विगलितं च्युतं मनोदुःखं यस्मिन् कर्मणि तत्तथा शयानः । अहं अद्य भवता अन्वग्रहीषि अनुगृहीतः । गृह्णातेः कर्मणि लुङ् । 'ग्रहोऽलिटि' इति दीर्घः । हे परात्मन् परमपूरुष । एतत् सर्वं तवैव करुणालसितं कृपाविलासं मन्ये । अन्यथा कथमेवमिति भावः ॥

नारायण इति । नाराः आपः अयनं यस्य सः नारायणः । 'पूर्वपदात् संज्ञायाम्' इति णत्वम् ।

"आपो नारा इति प्रोक्ताः आपो वै नरसूनवः ।
ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः ।।"

इति स्मृतेः । पूर्णः सर्वैश्वर्यसमग्रः । त्वमिह भूलोके नृणां नराणां भवार्तिहरणाय संसारदुःखापनयनाय अवतीर्णः प्रादुर्भूतोऽसि । स त्वं मे प्रसीद प्रसादं कुरु । 'षद्लृ विशरणादिषु' इत्यस्माल्लोटि 'पाघ्रा-' इत्यादिना सीदादेशः । स्वर्गेऽपि ते तव अतिदुःस्मराणि अत्यन्तं स्मर्तुमशक्यानि । बहुसुकृतसाध्यत्वादिति भावः । यद्वा अतिक्षपितः दुःस्मः दुष्टकामः यैः तानि । दुःखहेतुस्मरविकारहराणीति भावः । सकलाशुभानां समस्तदुरितानां घस्मराणि संहारकाणि । 'सृघस्यदः' इति क्मरच् । ते पदरजांसि चरणरेणून् नो विस्मराणि न विस्मरेयम् । प्रार्थनायां लोट् ॥

अथ भगवानाह— स्मर्तेति । अयि राजन्, नित्यं सदा मां स्मर्तासि

संशिष्यते फलपरस्य बिलम्बमात्रं
भ्रंशिष्यते न तु मदर्पितसर्वकर्मा ॥ ३३

प्रीतः प्रणम्य च हरिं स चिरं प्रतीक्ष्य
व्योम्नि स्थितं रविसमानमहो विमानम् ।
आरुह्य विस्मयनिविष्टजनौघदृष्टः
स्पष्टं त्रिविष्टपमदृष्टजितं प्रविष्टः ॥ ३४ ।

स्मरिष्यसि । 'स्मृ आध्याने' इत्यस्मात् कर्तरि लुट् । दिवि स्वर्गे । भुज्यन्त इति भोगाः । स्रक्चन्दनवनितादयः । कर्मणि घञ् । तान् भुङ्क्ष्व अनुभव 'भुज । पालनाभ्यवहारयोः' इत्यस्माल्लोटि 'भुजोऽनवने' इति तङ् । भोगविरतौ भोगावसाने च मदीयं मत्सम्बन्धि । 'त्यदादीनि च' इति वृद्धिसंज्ञायां 'वृद्धाच्छः' इति छप्रत्ययः । पदं पुनरावृत्तिवर्जितं स्थानं सर्तासि सरिष्यसि । प्राप्स्यसीत्यर्थः । 'सृ गतौ' इत्यस्मात् कर्तरि लुट् । फलपरस्य फलप्रधानस्य । भक्तस्येत्यर्थः । फलवरस्येति पाठे श्रेष्ठफलस्येत्यर्थः । विलम्बमात्रं कालक्षेपमात्रं संशिष्यते । 'शिष्लृ विशेषणे' इत्यस्मात् कर्मणि लट् । शास्त्रैर्वा शेषः । क्रियत उच्यत इति वार्थः । फलकामी चिरकालादपि फलं भोक्ष्यत इति भावः पाठान्तरे फलकामिनोऽवश्यं फलं भविष्यतीति भावः । मयि अर्पितानि न्यस्तानि सर्वकर्माणि नित्यनैमित्तिकप्रायश्चित्तरूपाणि येन सः । मत्प्रीत्यर्थमनुष्ठितकर्मकलाप इत्यर्थः । तुशब्दो विशेषद्योतनार्थः । न भ्रंशिष्यते नाधःपतिष्यति । 'भ्रंशु अधःपतने' इत्यस्मात् कर्तरि लिट् ॥

प्रीत इति । सः नृगः प्रीतस्सन् हरिं श्रीकृष्णं प्रणम्य नमस्कृत्य चिरं चिरकालं प्रतीक्ष्य प्रतिपाल्य व्योम्नि आकाशे स्थितं रविसमानं सूर्यमण्डलसदृशं महस्तेजो यस्य तत् विमानं व्योमयानमारुह्य विस्मयनिविष्टेन आश्चर्याविष्टेन जनौघेन जनसमूहेन दृष्टः अवलोकितः सन् अदृष्टजितं सुकृतसाधितं त्रिविष्टपं स्वर्गं प्रविष्टः प्राप्तः ॥

चित्रीयमाणमथ सम्मिलितं जनौघं
तत्रोपहूय जगतां पतिरित्थमूचे ।
अत्यादृताः शृणुत सम्प्रति मामकीनाः
पृथ्वीभृतोऽस्य चरिते परमोपदेशान् ॥ ३५ ॥

अस्मादृशां वितरणाद्यमिदं कियत् स्या-
द्विस्मापनेऽस्य सुकृते बत चिन्त्यमाने ।
भूयो विदाङ्कुरुत हन्त मदाङ्कुरोऽपि
कुर्वीत दुर्विपदमेव हि सर्वपुंसाम् ॥ ३६ ॥

**चित्रीयमाणमिति** । अथ नृगमोक्षानन्तरं जगतां लोकानां पतिः श्रीकृष्णः चित्रीयमाणं विस्मयमानम् । 'नमोवरिवश्चित्रङः क्यच्' इति क्यच् । ङित्वात्तङ् । सम्मिलितं सङ्घीभूय स्थितं जनौघं जनसमूहं तत्र तस्मिन् देशे उपहूय समीपमानीय इत्थं वक्ष्यमाणप्रकारेण ऊचे उक्तवान् । हे मामकीनाः मज्जनाः । 'युष्मदस्मदोरन्यतरस्यां खञ् च' इति खञ् । 'तवकममकावेकवचने' इति ममकादेशः । अस्य पृथ्वीभृतो नृगस्य चरिते चरित्रविषये परमोपदेशान् सारोपदेशान् अत्यादृतास्सादराः सन्तः शृणुत । शृणोतेर्लोट् ॥

**अस्मादृशामिति** । विस्मापने विस्मयकारके । विपूर्वात् स्मयतेर्णौ 'नित्यं स्मयतेः' इत्यात्वे पुगागमे नन्द्यादित्वाद् ल्युट् । अस्य नृगस्य सुकृते पुण्ये चिन्त्यमाने विचार्यमाणे । वयमिव पश्यन्तीत्यस्मादृशः । 'त्यदादिषु' इति दृशेः क्विनि 'आ सर्वनाम्नः' इत्यात्वम् । अस्मादृशां अस्मद्विधानां इदं वितरणाद्यं दानादिकं कियत् स्यादिति । तुच्छमित्यर्थः । बतेत्याश्चर्ये । भूयः पुनः यूयं विदाङ्कुरुत जानीत । 'विदाङ्कुर्वन्त्वित्यन्यतरस्याम्' इति वेत्तेः लोट्याम् गुणाभावः लोटो लुक् लोडन्तकरोत्यनुप्रयोगश्च । वक्ष्यमाणवाक्यार्थः कर्म । सर्वपुंसां समस्तपुरुषाणां मदाङ्कुरः मदलेशोऽपि दुर्विपदं दुष्टापदमेव कुर्वीत । हन्तेति खेदे ॥

नाकादिकामनकृता बहवोऽपि धर्माः
शोकाय भोगविरतौ पतनानुबन्धात् ।
मय्यर्पिता यदि त एव फलावसाने
मुक्त्यै भवन्ति तदपीह विबोधितव्यम् ॥ ३७ ॥

सर्वं तिष्ठतु नाम दुर्वचमहापुण्याम्बुधेरप्यहो
दुर्वारा द्विजकोपतो विपदभूदर्वाग्जने किं पुनः ।
अज्ञानापतितं धनं द्विजवरौ भूयोऽनुनीतौ भृशं
पुण्याब्धिर्नृपतिस्तथापि समभूद्दुर्जन्म लज्जाकरम् ॥ ३८

**नाकादीति** । नाकादीनां स्वर्गादीनां कामनेन इच्छया कृताः बहवोऽनल्पा अपि धर्माः सुकृतानि भोगविरतौ स्वर्गादिभोगावसाने पतनानुबन्धात् अधःपतनसम्बन्धात् शोकाय दुखाय भवन्ति ।

'यावत् सम्पातमुषित्वा पुनरेत्यस्मै लोकाय कर्मणे'

'क्षीणे पुण्ये मर्त्यलोकं विशन्ति'

इति श्रुतिस्मृतिभ्याम् । त एव मयि परमेश्वरे अर्पिताः न्यस्ता यदि फलावसाने मुक्त्यै मोक्षाय भवन्ति । अत्रोभयत्रापि तादर्थ्ये चतुर्थी ।

"ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥"

इति स्मृतेः । इति यत् तदपीह धर्मविषये विबोधितव्यं ज्ञातव्यम् । युष्माभिरिति शेषः ॥

**सर्वमिति** । सर्वं तिष्ठतु नाम । दुर्वचमहापुण्याम्बुधेः अनिर्वचनीयपुण्यसागरस्य नृगस्यापि द्विजकोपतः ब्राह्मणकोपात् दुर्वारा अपरिहार्या विपदापदभूत्, अर्वाग्जने अपकृष्टलोके किं पुनः । किमु वक्तव्यमिति भावः । धनं गोरूपं ब्रह्मस्वं अज्ञानापतितं अविचारसमागतं न तु बुद्धिपूर्वकमपहृतम् । द्विजवरौ ब्राह्मणश्रेष्ठौ भूयः बहुवारं अनुनीतौ सान्त्वितौ । नृपतिः नृगः भृशं पुण्याब्धिः यद्यपि तथापि लज्जाकरं जुगुप्सितं दुर्जन्म कृकलासजन्म समभूत् । भवतेर्लुङ् । तस्मादवश्यं ब्राह्मणकोपः परिहरणीय इति भावः ॥

एवं नाम भयानकाः क्षितिसुराः किञ्चास्य तत्तादृशं
दुर्जन्मापि तदीययैव कृपया भद्रावहञ्चाभवत् ।
भद्राभद्रविधौ स्वतन्त्रगतयस्तद्वन्दनीया द्विजा-
स्तृप्यन् विप्रजनोऽपि कल्पविटपी कुप्यन् स कल्पानलः ॥ ३९ ॥

अज्ञातापहृतेऽपि भूसुरधने दोषोऽयमेतादृशो
धीपूर्वाहरणे तु तस्य न समाधानं कथञ्चित् क्वचित् ।
ही ही हैहयराडपि द्विजगवीं प्रागाहरन्नक्षिणोत्
स्वं स्वीयञ्च कुलं तथा नृपकुलं त्रिस्सप्तकृत्वोऽखिलम् ॥ ४० ॥

**एवमिति ।** किञ्च क्षितिसुराः एवं भयानकाः भयङ्कराः । नामेति **प्रसिद्धौ ।** अस्य नृगस्यापि तत्तादृशं अतिदुःखावहम् । तच्छब्दस्य तादृश-शब्देन 'सुप्सुपा' इति समासः । दुर्जन्मापि तदीयया ब्राह्मणसम्बन्धिन्या कृपया करुणयैव भद्रावहं सुखकरञ्चाभवत् अभूत् । तत् तस्मात् भद्राभद्रविधौ शुभा-शुभविधाने स्वतन्त्रगतयः स्वच्छन्दमनोवृत्तयः वन्दनीयाः । जनैरिति शेषः । शुभाशुभविधानसामर्थ्यमेव विवृणोति - विप्रजनः तृप्यन् सन् सन्तुष्यन् सन् कल्प-विटपी कल्पवृक्षः । वाञ्छितार्थप्रद इत्यर्थः । अपीति सम्भावनायाम् । स विप्रजनः कुप्यन् क्रुध्यन् कल्पानलः सर्वसंहारक इत्यर्थः ॥

**अज्ञातेति ।** भूसुरधने ब्राह्मणस्वे अज्ञातापहृते अज्ञातमविचारितं यथा तथा अपहृते गृहीते सत्यपि एतादृशः जुगुप्सितजन्महेतुः अयं दोषः । अभू-दिति शेषः । तस्य ब्रह्मस्वस्य धीपूर्वाहरणे ज्ञानपूर्वापहारे तु । तस्येति दोष-परामर्शकं वा । समाधानं परिहारः क्वचित् कुत्रचिदपि कथञ्चित् केनापि प्रकारेण । न ज्ञानपूर्वापहारदोषः परिहार्य इति भावः । प्राक् पुरा हैहयराट् कार्तवीर्योऽपि द्विजगवीं जमदग्निपशुं आहरन्नपहरन् सन् स्वमात्मानं स्वीयं स्व-सम्बन्धि कुलं वंशं तथा त्रिस्सप्तकृत्वः एकविंशतिकृत्वः अखिलं नृपकुलञ्चा-क्षिणोत् क्षपयति स्म । क्षिणोतेर्लङ् । हीहीति खेदे ॥

शर्वो हालहलं निपीय जरयाञ्चक्रे त्र्यधीशैरपि
व्यक्तं दुर्जरमेव वर्ज्यमधिकं ब्रह्मस्वहालाहलम् ।
अत्तारं हि विषं हिनस्ति दहनो मूलावशेषं दहेद्
ब्रह्मस्वारणिपावकस्तु सकलं दग्धा समूलं कुलम् ॥ ४१ ॥

आत्तं चेद् दुरनुज्ञया द्विजधनं त्रीन् पूरुषान् पातयेत्
भुक्तं तत्तु बलेन चेद्दश परान् पूर्वांश्च ही ही जनान् ।
दत्तां स्वेन परेण वा खलमतिर्यो विप्रवृत्तिं हरेत्
सत्यं वर्षशतायुतं स हि भवेदुच्चारचारः कृमिः ॥ ४२ ॥

मा हरत मा हरत मोहरतचित्ता
ब्रह्मधनमुन्मथनमुन्नतगतीनाम् ।

**शर्वेति ।** शर्वः शिवः हालहलं कालकूटं निपीय पीत्वा जरयाञ्चक्रे जरयामास । त्र्यधीशैः ब्रह्मविष्णुरुद्रैरपि अधिकं वर्ज्यं ब्रह्मस्वहालाहलं दुर्जरं जरयितुमशक्यमेव । न केनापि ब्रह्मस्वविषं निपीय जारितमिति भावः । हि यस्माद् विषं वत्सनाभादि अत्तारं भोक्तारं हिनस्ति हन्ति । 'हिसि हिंसायाम्' इत्यस्मात्, न त्वन्यत् । दहनः अग्निः मूलावशेषं मूलमवशिष्य दहेत् । वृक्षादिकमिति शेषः । न तु समूलम् । ब्रह्मस्वारणिपावकस्तु सकलं कुलं समूलं मूलसहितं यथा तथा दग्धा धक्ष्यति । दहतेर्लुट् ॥

**आत्तमिति ।** दुरनुज्ञया दुरनुवादेन द्विजधनं ब्राह्मणमूल्यं आत्तं स्वीकृतं चेत् त्रीन् पूरुषान् पित्रादीन् पातयेत् अधःप्रापयेत् । तद् ब्रह्मस्वं तु बलेन भुक्तश्चेत् परान् पुत्रादीन् दश पूर्वान् पित्रादींश्च दश जनान् पातयेत् । हीही कष्टं, स्वेन आत्मना परेण अन्येन वा दत्तां प्रतिपादितां विप्रवृत्तिं ब्राह्मणजीवनं खलमतिः दुर्बुद्धिः यो हरेत् स वर्षशतायुतं (उच्चारचारः) मूत्रचारः कृमिः (कीटः भवेत् ।।

**मा हरतेति ।** हे जनाः यूयं मोहरतचित्तास्सन्तः उन्नतगतीनां सुकृत-

विप्रजनविप्रकृतिरप्रतिमदोषा
क्षिप्रमिह कल्पयति विप्रियसमूहान् ॥ ४३ ॥

विप्राणां हि कुटुम्बिनां प्ररुदतां वित्तापहारादिना
यावद्रेणुसिचश्शुचाश्रुकणिकास्तावत्सहस्रं समाः ।
क्षुल्लाः कुल्यजनैस्समं नृपतयो दुर्लङ्घ्यमिङ्गन्त्यहो
कुम्भीपाकमपारघोरनरकं बम्भ्रम्यमाणाश्चिरम् ॥ ४४ ॥

विप्रापराधविधिसम्यगपार्जनेन
स्वल्पायुषो नृपतयोऽल्पधना रुजार्ताः ।

प्राप्यपदवीनामुन्मथनं विनाशनं ब्रह्मधनं ब्रह्मस्वं मा हरत मा हरत मा हरध्वं मा हरध्वम् । 'नित्यवीप्सयोः' इति द्वित्वम् । यद्वा मोहरतमोहरताचित्ता इति पाठे मा ऊहरताः मोहरताः । नञर्थस्य माशब्दस्य 'सुप्सुपा' इति समासः । विचारशून्या इत्यर्थः । ते च ते मोहरतचित्ताश्चेति कर्मधारयः । विप्रजनविप्रकृतिः ब्रह्मद्रोहः अप्रतिमदोषा । अपरिहरणीयत्वादिति भावः । इह क्षिप्रं अविलम्बेन विप्रियसमूहान् कल्पयति जनयति । तस्माद् ब्राह्मणद्रोहो न कार्य इति भावः ॥

विप्राणामिति । वित्तापहारादिना द्रव्यमोषणादिना प्ररुदतां अश्रुमोचनं कुर्वतां कुटुम्बिनां कुटुम्बसहितानां विप्राणां शुचा शोकेन यावतो यत्परिमाणान् रेणून् सिञ्चन्तीति यावद्रेणुसिचः अश्रुकणिका नेत्रजलकणाः । भवन्तीति शेषः । तावत्सहस्रं तद्रेणुपरिमाणं सहस्रं समाः संवत्सरान् ।

'संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः ।'

इत्यमरः । क्षुल्लाः क्षुद्राः नृपतयः राजानः कुल्यजनैः वंश्यजनैः समं दुर्लङ्घ्यं दुरतिक्रमं कुम्भीपाकं नाम अपारं घोरनरकं चिरं बम्भ्रम्यमाणास्सन्तः इङ्गन्ति गच्छन्ति । 'इगि गतौ' इत्यस्य लट् ॥

विप्रापराधेति । नृपतयः राजानः विप्रापराधविधेः ब्राह्मणापराधविधा-

राज्यच्युता रिपुजिताश्च भवन्ति भूमौ
दृष्ट्वापि हन्त न विदन्ति वसुन्धरेशाः ॥ ४५ ॥

मत्का हृत्कुहरेऽपि बाडवजनं द्रोढुं न सङ्कल्प्यता-
मागस्यप्यतुले नमस्यत बहु घ्नन्तं शपन्तश्च वा ।
किञ्चेदं कथयामि किञ्चन यदा विप्राप्रियं मत्प्रजाः
कुर्युस्तत्क्षणमेव विक्षतमिति ज्ञेयं यदूनां कुलम् ॥ ४६

गिरामयमगोचरो ननु नृगो नृपो येन हि
द्विजावपदरोषणावधिकशान्तितस्सान्त्विती ।
तथैव सकलो जनोऽप्यनुसरीसरीतु द्विजा-
नपि प्रचुररोषणान् गलितदूषणान्वेषणः ॥ ४७ ॥

नस्य सम्यक् अपार्जनेन अपरिहारेण हेतुना स्वल्पायुषः अल्पधनाः रुजार्ताः रोगातुराः राज्यादाधिपत्यात् च्युता भ्रष्टा रिपुजिताः शत्रुसमाक्रान्ताश्च भूमौ भवन्ति । वसुन्धरेशाः राजानः दृष्ट्वापि नहुषादिवृत्तं ज्ञात्वापि न विदन्ति न जानन्ति । कर्तव्यमिति शेषः । हन्तेति खेदे ॥

**मत्का इति ।** मामकाः यूयं हृत्कुहरेऽपि अन्तःकरणेऽपि बाडवजनं ब्राह्मणजनं द्रोढुं द्रोग्धुं । 'वा द्रुह' इति घत्वाभावे ढत्वम् । न सङ्कल्प्यताम् । अपि च अतुले आगसि बहु भूरि घ्नन्तं हिंसन्तं शपन्तमाक्रोशन्तञ्च बाडवजनं नमस्यत नमस्कुरुत । 'नमोवरिवश्चित्रङः क्यच्' इति क्यजन्ताल्लोट् । किञ्च इदं किञ्चन किञ्चित् कथयामि वदामि । यदा मत्प्रजाः मज्जनाः विप्राप्रियं ब्राह्मणापराधं कुर्युः तत्क्षणमेव यदूनां कुलं विक्षतं नष्टमिति विज्ञेयम् ॥

**गिरामिति ।** अयं नृगो नृपः गिरां वाचामगोचरः अविषयः येन नृगेण अपदरोषणौ अकारणकोपनौ अधिकशान्तितः अत्यन्तोपशमेन सान्त्वितौ अनुनीतौ । तथैव सकलो जनोऽपि प्रचुररोषणान् अतिकोपनान् अपि द्विजान् ब्राह्मणान् गलितं दूषणान्वेषणं यस्मात् तथाभूतस्सन् अनुसरीसरीतु । सरतेर्यङो लुक् । इति सान्त्विताविति पूर्वेणान्वयः (?) ॥

नम्या देवगणा नृणां विधिहरौ तेषां तयोरप्यहं
सोऽहं विप्रकुलं नमामि सततं सर्वैस्तथा नम्यताम् ।
नो चेत्कोऽपि नमेत् क्वाचित्सतु मया दण्ड्येत खण्ड्येत वा
विप्रेष्वप्रियकारि दोरपि निजं सद्यो मया छिद्यते ॥ ४८ ॥

विश्रावयन्निति जनान्मृदुहासमिश्रै-
र्विश्राणयन्नखिलमोदमपाङ्गपातैः ।
ब्रह्मण्यमौलिरगमन्नृगधर्ममेव
सम्मानयद्भिरखिलैस्सह राजधानीम् ॥ ४९ ॥

(इति पुराणसारानुसारेण कथा ।)

**नम्या इति** । नृणां मनुष्याणां देवगणा इन्द्रादयः नम्याः । **तेषां** विधिहरौ ब्रह्मरुद्रौ नम्यौ । तयोर्ब्रह्महरयोरपि अहं नम्यः । सः अहं विप्रकुलं नमामि । सततं सर्वैः जनैः तथा नम्यतां नमस्क्रियताम् । कोऽपि क्वाचित् विप्रकुलं नो नमेत् न नमस्कुर्याद्यदि स पुरुषस्तु मया दण्डयेत शिक्ष्येत खण्ड्येत पीड्येत । वा समुच्चयार्थः । विप्रेषु अप्रियकारि अनिष्टकरं निजं दोर्बाहुरपि सद्यः तत्क्षणमेव मया छिद्यते खण्ड्यते ॥

**विश्रावयन्निति** । इति इत्थं जनान् विश्रावयन् । धर्ममार्गमिति शेषः । मृदुहासमिश्रैः मन्दहासयुक्तैः अपाङ्गपातैः कटाक्षनिरीक्षणैः अखिलस्य मोदमानन्दं विश्राणयन् वितरन् । ब्रह्मणे हिताः ब्रह्मण्याः । 'तस्मै हितम्' इति यत्प्रत्ययः । तेषां मौलिः शिरोरत्नं श्रीकृष्णः नृगधर्ममेव सम्मानयद्भिः श्लाघमानैः अखिलैः यदुभिः सह राजधानीमगमत् अगच्छत् । गच्छतेर्लुङ् ॥

(अथ 'दिष्टान्तमागतोऽहं वपुरिह कृकलासमुग्रमद्राक्षम्' (श्लो-१०)
इत्यस्य स्थाने श्रीभागवतानुसारेण विशेषः—)

**दिष्टान्तमागतोऽहं याम्यभटानभ्यचक्षि सौम्यतमान् ।**

**तैश्च सानुनयविनयैर्माननीयेन यानेन संयमिनीमुपनीतं मां कृतान्तः स्वयं धृतान्तर्मोदस्सबहुमानं मानयित्वैवमवादीत् ॥**

**न त्वं मद्दर्शनार्हस्तदपि सुकृतिनं द्रष्टुमेवानयं त्वां**
**किं सिद्धार्थाय दास्ये किमु सरटतनुं पूर्वमेवर्च्छसि त्वम् ।**
**प्राप्ते कृष्णाप्तिकाले किमपि सरटभावोऽस्तु पूर्वन्तु भोगान्**
**मद्दत्तान् भोक्ष्यसे वा कथय तदधुना रामि ते कामितं चेत् ॥५० ॥**

एवं पुराणसारानुसारेण कथामुपसंहृत्य कञ्चिद्विशेषं प्रतिपिपादयिषुः कविः श्रीभागवतानुसारेण कथामुपसंहर्तुमुपक्रमते— (दिष्टान्तमित्यादि)। पूर्वोक्तायाः 'पूर्वस्मादपि' इत्यस्या आर्यायाश्चतुर्थपादस्य स्थाने 'याम्य' इत्यादिर्निवेश्यते। पादत्रयन्तु पूर्वोक्तमेव। अहं दिष्टान्तं मरणमागतस्सन् याम्यभटान् यमदूतान् सौम्यतमानत्यन्तसौम्यान् अभ्यचक्षि अद्राक्षम्। चक्षिङो लुङ् ॥

तैरिति। सानुनयविनयैः ससान्त्ववादप्रश्रयैः तैर्यमभटैः च माननीयेन श्लाघ्येन यानेन विमानेन संयमिनीं यमपुरीमुपनीतं प्रापितं मां कृतान्तः यमः स्वयं धृतः अन्तर्मोदः हृदयानन्दो येन सः सन् सबहुमानं यथा तथा मानयित्वा पूजयित्वा एवं वक्ष्यमाणप्रकारेणावादीत्। वदतेर्लुङि 'वदव्रज' इति वृद्धिः ॥

हे राजन् त्वं मद्दर्शनार्हः मन्निरीक्षणयोग्यः न। महासुकृतकारित्वादिति भावः। तदपि तथापि सुकृतित्वात् द्रष्टुमेव आनयं आनीतवान्। नयतेर्लङ्। न किञ्चिदन्यत्। सिद्धार्थाय कृतार्थाय। तुभ्यमिति शेषः। किं दास्ये वितरिष्यामि। न किञ्चिदपीत्यर्थः। त्वं सरटतनुं विप्रशापनिमित्तां कृकलासमूर्तिं पूर्वमेव पुण्यफलभोगात् प्रागेव ऋच्छसि प्राप्नोषि। अथवा कृष्णाप्तिकाले कृष्णसन्दर्शनसमये प्राप्ते सति किमपि किञ्चित्कालं सरटभावः कृकलासत्वमस्तु भवतु। पूर्वन्तु मद्दत्तान् मया प्रतिपादितान् भोगान् भोक्ष्यसे वा। तदधुना कथय वद ते तुभ्यं रामि ददामि। 'रा दाने' इत्यस्माल्लट्। कामितं चेत् ॥

**पुरो हरिविलोकनादनुभवानि भोग्यानि चेत्**
**प्रभूतरजसो भवेन्मम न तादृशी तत्कृपा ।**
**हरिस्मरणशोभना सरटतैव मे जायतां**
**बिभेमि न पुनश्च्युतेरिति तमभ्यधामप्यहम् ॥ ५१ ॥**

**अयि साधु साधु भणितं धीरोऽसि तथैव भवतु भद्रं ते ।**
**इति तेन कथितमात्रं वपुरिह कृकलासमुद्रमद्राक्षम् ॥ ५२ ॥**

नृग आह—**पुर इति**। हरिविलोकनात् श्रीकृष्णदर्शनात् पुरः पूर्वं भोग्यानि पुण्यफलानि अनुभवानि चेत् गृह्णानि यदि प्रभूतरजसः बहुलाहङ्कारस्य मम तादृशी महती । सत्त्वैकसाध्येत्यर्थः । तत्कृपा हरिकरुणा न भवेत् न स्यात् । तस्मात् हरिस्मरणशोभना सरटता कृकलासत्वमेव मे जायताम् । पुनश्च्युतेः पतनान्न बिभेमि । हरिभक्तस्य कदाचिदपि पतनाभावादिति भावः । इति इत्थं तं धर्मराजमभ्यधां अकथयम् । अभिदधातेर्लुङि 'गातिस्था' इति सिचो लुक् ॥

अयि राजन् साधु साधु अत्यन्तशोभनं भणितमुक्तम् । त्वयेति शेषः । त्वं धीरोऽसि । उपस्थितेऽपि भोगे चापलाभावादिति भावः । तथैव यथा त्वदभिलषितं भवतु ते भद्रं मङ्गलं भवतु इति एवं तेन धर्मराजेन कथितमात्रे उक्तमात्रे इह भूमौ कृकलासमुद्रं सरटचिह्नं वपुः शरीरमद्राक्षम् । इति नृगस्य भगवन्तं प्रति वचनम् ।

इति श्रीभागवतानुसारेण उक्तम् । 'अत्राप्यहम्' इत्यादि सन्दर्भशुद्धये योजनीयम् ॥



# नृगमोक्षप्रबन्धः

## श्लोकानुक्रमणी

# शुद्धपत्रका

| पार्श्वम् | पङ्क्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | १९ | (प्रणुन्नः) | (प्रणुन्नाः) |
| ३ | १३ | स्वार्थको | स्वार्थिको |
| ७ | ,, | आयत्ताता | आयत्तता |
| ,, | २२ | लोक | लोक्त |
| ११ | ११ | ब्राह्म | ब्राह्म |
| १२ | १८ | सजस्त | सजास्त |
| १३ | ३ | शाभं | शोभं |
| ,, | ५ | ञ्च | ञ्ज |
| १९ | १७ | उप.सर्या | उपसर्या |
| ,, | १८ | इत्यः मर | इत्यमरः |
| २० | ४ | चतुर्वै | चातुर्वै |
| २१ | २४ | गोगोष्ठ | गोष्ठ |
| २२ | १८ | द्राध्या | द्राघ्या |
| २३ | १७ | स्थाध्वो | स्थाघ्वो |
| २४ | ११ | सुदुर्दशा | सुदुर्दशौ |
| २७ | १० | विचरिता | विचारिता |
| २८ | २२ | णिञ | णीञ् |
| ,, | २३ | पूर्वपति | पूर्वप्रति |
| ३४ | १९ | उद्दी । ज्व | उद्दीपितेन उज्ज्व |
| ३६ | १७ | अतिशयने | अतिशायने |
| ४१ | १४ | 'युष्मदस्मद्भ्यां घञ् च' इति घञ् | 'युष्मदस्मदोरन्यतरस्यां खञ्च इति खञ् |
| ४२ | १२ | दुखाय | दुःखाय |
| ४४ | ९ | भवेद्दुच्चा | भवेदुच्चा |
| ,, | १७ | व्रह्मस्वा | ब्रह्मस्वा |
| ४९ | १६ | कथितमात्रो | कथितमात्रे |

## IN THE PRESS

1. Bhōjanakuthūhala (Dietetics) of Raghunātha, Part I.
2. Prakriyāsarvasva (Grammar) by Nārāyaṇa Bhaṭṭa Part IV.
3. Sarasvatīkaṇṭhābharaṇa (Grammar) of Bhōja with the commentary Hṛdayahāriṇī of Daṇḍanātha Nārāyaṇa Part V.
4. S'ivavilāsa (kāvya) of Dāmōdara.
5. Sītārāghava (Nāṭaka) of Rāmapāṇivāda.
6. Tripuradahana (kāvya) of Vāsudēva, with the commentary of Paṅkajākṣa.
7. Abhijñānas'akuntaḷacarcā
8. Mīmāṁsās'lōkavārtika (Mīmaṁsā) of Kumārila, with the commentary of Sucaritamis'ra.
9. Harṣacarita with the commentary Marmāvabōdhinī.
10. Bhojanakutūhala, Part II.

---

## UNDER PREPARATION

1. Tantrasamuccaya with two commentaries, Part III.
2. Bhōjanakutūhala, Part III.
3. Aṣṭāngahṛdayā with the commentary of Srīdhara Paṇḍita, Part III.
4. Tantrasangraha with commentary.